# सामवेदीया गौतमी शिक्षा

अथ त्रयस्त्रिंशद्व्यञ्जनानि भवन्ति
स्पर्शान्तस्थोष्माणश्चेति
तत्र ककारादयो मकारान्ताः स्पर्शाः पञ्चविंशतिश्चत्वारोऽन्तस्थास्ते
यरलवाश्चत्वारश्चोष्माणस्ते हशषसाश्चेत्यनेकं व्यञ्जनं यत्रोपर्युपरि संयुक्तं
तत्संयोगसंज्ञं भवति । इत्यस्वरं च पूर्वमक्षरम्
अथ त्रिविधः संयोगपिण्डो भवत्ययस्पिण्डो दारुपिण्डस्तथोर्णापिण्डश्चेति
यमसहितमयस्पिण्डम् दारुपिण्डमन्तस्थैर्युक्तम्
यमान्तस्थवर्जन्तूर्णापिण्डमित्यन्तस्थयमसंयोगे विशेषो नोपलभ्यत
इत्यशरीरं यमं विद्यादन्तस्थः पिण्डनायकः १

अथानन्त्या विंशतिर्भवन्ति ते कचटतपाः खछठथफा गजडदबा
घझढधभाश्चेत्यथान्त्याः पञ्च ते ङञणनमाश्चेति
अथानन्त्याश्चत्वारस्ते सयमास्ते कुं खुं गुं घुं
इत्यनन्त्यान्त्यसंयोगेऽनन्त्यपूर्वेऽनन्त्योत्तरे व्यवधानवर्जिते तत्र यमा वर्त्तन्ते न
संशय इति २

अथ सर्वेषां व्यञ्जनानां द्विर्भावो भवति द्वादशाक्षरवर्जं ते खछठथफा
घझढधभा रहयोश्चेति
हकारस्यैके मन्यन्ते यदि भवति रहयोर्मध्ये
सर्वत्र स्वरात्संयोगादिः क्रामति रेफहकारवर्जम्
ताभ्यां परं क्रामति
न क्रमते परमुपध्मानीयानुस्वारजिह्वामूलीयानां विसर्जनीयपरं च क्षः
त्सप्रत्यये क्षः त्सप्रत्यये ३

अथ द्व्ययक्षराणामुदाहरणं द्वौ तकारौ तस्मात्ते सत्तमाः यथा प्रियवेत्तेव
भवति
द्वौ नकारौ यन्नमस्यन्ति
शन्नो देवीरुन्नयामि । द्वौ जकारौ यज्ञायथा उज्जिहाना अस्थिमज्जेति

द्वौ मकारौ यम्मित्रं तम्मन्ये शम्मघवन्
द्वौ चकारौ यदद्यकच्च परमाच्चिद्यथाशु भार्गवे साम्नयुच्चाते जातमन्धꣳसाः
द्वौ सकारौ यस्सुक्षिती पुनानस्सोऽग्निस्समिधा
द्वौ यकारौ यथोभय्यो धानञ्जय्यः सहरय्या निवर्त्तस्वेति
द्वौ दकारौ यद्दूरे यद्दिधृक्षे मोद्दालको हारुणिः
द्वौ लकारौ स्वर्गाल्लोकादूद्ध्वर्वमुल्लिखेदोर्भिरेवैनल्लोकैः
द्वौ ङकारावृश्यव्रते ऋृश्यास इन्द्रभुङ्ङति मघवन्निन्द्र भुङ्ङति
प्रभुङ्ङती-न्द्रस्तसरपूता २३४५ एवमादीनि ४

चकारछकाराविन्द्रमच्छेति
तकारथकारौ वेत्थाहीति
दकारधकारौ शुद्धमिति
बकारभकारावब्भक्षस्तृतीयमिति
यणवे रेफषकारावर्षासोमद्युमत्तम एदं बर्हिरिति रहौ
विह्रुतमिति हरौ
दर्शेति रशौ
स्पर्शेति सपौ
दयौ देवस्थाने दद्यौरक्रान्भूमिरतनत्समुद्रं समचूकुपदिट्
इडा
२३४५ एवमादीनि ५

यानि चान्यानि यथा करणे सर्पसामधर्मरोचनाभीवर्तेषु
संयमन्नव्यायमन्वियमन्नसमायमन्नुद्युल्लोकानरोचयोहोयितंवो ३ दा ३
स्मामृतीषहो वा यलवैर्द्विर्भावस्तैः पूर्वः सानुनासिकस्तुल्यस्थानकरणपरे
क्रमप्रतिषेधः क्रमप्रतिषेधः ६

अथ त्र्यक्षराणामुदाहरणमक्षरमिति ककषास्तमृभ्वसम्भवाः
यच्छिक्षसि चचछास्त्वामिद्धि ददधास्त्रैशोके शशवा विश्वोहाइ
ब्रह्मेति हममाः
विष्णुरिति षणणाः

पृश्निरिति शशनाः
सृप्रकरस्नमूतय इति ससनाः
सार्वकामिके ननकाः सर्वान् कामानशीमही २३४५ एवमादीनि ७

आम्रे ममराः
दीर्घे रगघाः
पादमध्ये दधयाः
पादोपान्तीये ननताः
गौशृङ्गे ततसास्तरणिरित्सषासती ३
षट्सु टटसाः
खड्गे डडगाः
कुब्जे बबजाः
वज्रे जजराः
ददरा वरुणसाम्नीन्दुः समुद्द्रमुर्विया विभातीति २३४५ एवमादीनि ८

आख्यातं कखयाः
रककखा मूर्क्खम्
ङङखाः शङ्ङ्खम्
पत्थ्यं तथया ञञजाः शार्ग्हावाञ्जाता १२३४ यि वियञ्जते स समञ्जते
पूज्ज्यं जजयाः
दूड्ढ्यम् डढयाः
तुब्भ्यं बभयाः
सन्षडह इति ननषाः
रकका अर्क्कपुष्पे साम्नयर्क्को देवानां परमे वियो वियो मा २३४५ नर्क्कस्य देवाः परमे वियो वियो मा २३४५ एवमादीनि त्र्यक्षराणामेतदुदाहरणं यथोक्तं यथोक्तम्

इति प्रथमः प्रपाठकः १

अथ चतुरक्षराणामुदाहरणं सयमायमाभ्यां सयमांस्तावद्यथाग्निरिति द्वौ गकारौ यमनकारौ

यज्ञौ इति द्वौ जकारौ यमञकारौ युनज्मित इति द्वौ जकारौ यम मकारौ
विद्माहित्वेति द्वौ दकारौ यम मकारौ
समन्ते दधयममकारा भरामेद्ध्मं कृणवामा हवींषि तायि
गृभ्णीत इति बभयमणकाराः
उन्मृद्नीतानिति ददयमनकाराः
सगिड्मेति डढयममकाराः
पाप्मेति पपयममकाराः
विलम्बसौपर्णे ततयमनकारा इत्यस्य प्रत्नामनुद्युतमी ये इयाहाइ एवमादीनि
१

अथ यमवर्जितानां यथोदङ्ङन्यञ्चेति ङङनयाः
कार्ष्मान्वाजीति रषमाः
यद्वीडाविन्द्र यत्स्थिर इति ततसथाश्चन्द्रमा अप्स्वन्तरेति पपसवाः
हारायणे गगधयाः शग्ग्ध्यूष्वौहो१२ इशचीपतायि
कृत्स्नमिति ततसनाः पङ्क्तिरिति ङङकताः
स्थिरप्स्नूमिति पपसनाः
प्राङ्ङ्क्सुरिति ङङकसाः
कणवरथन्तरे रजजया माज्ज्र्यमानस्सुहस्तिया एवमादीनि २

प्रेङ्खांस्तर्ह्यारोहन्तीति रहहयास्तथा ब्व्रत इति बबववराः
सम्राज्ञीश्वराश्श्र्वामिति शशरवाः
मत्स्येत्वेति ततसयाः
श्रौतकत्वे ननदराः इन्द्रायमद्वने सुतमिन्द्रायामो वा
अयज्ज्व्यघटत इति जजवयाः
कणणठ्य इति णणठया वर्गान्त्य इति ननतयाः
सुनिक्क्त्सीति ककतसाः
रथन्तरे रशशयाः प्राप्नुवदश्श्र्यायतो३वा एवमादीनि ३

अथ पञ्चाक्षराणामुदाहरणम्
यथा ज्योतिग्गौरायुस्त्र्यह इति ससतरयाः

सङ्ङ्द्त्तुत्येति ङङकषणाः
तस्मिन्त्स्वतन्त्रेति ननतसवाः
विश्वप्प्स्नया इति पपसनयाः
ङङकषवाः पयस्यग्ने युङ्ङ्द्वाहि १ ३ येतवा
पाष्ण्योरिति रषषणयाः
शग्ग्ध्व्यांरोह इति गगधवयाः
पूर्णाञ्ज्ज्योत्याविति ञञजवयाः
हुवेजसिक्रयरराट्स्वतामिति णणटसवाः
तार्क्ष्यसाम्नीति र क क ष याः तार्क्ष्यमिहा १३४३ हुवा १ ५ यिमा १६५६
एवमादीनि ४

अथ सयमान्यथा सबुद्ध्न्या इति दधयमनयाः
दुःष्वप्प्न्यं स्विति पपयमनयाः
सार्पराज्ञ्या इति जजयमञयाः
माट्टण्या इति टटयमणयाः
शुध्ये गघयमनयाः पतिं वो अग्घ्न्यानां धेनुनामिषूऽ२३ध्यसा उ वा
सक्थ्न्या इति कथयमनयकाराः
प्राथमवृद्धिस्त्नुमूतय इति ससतयमनकाराः
प्राग्ग्ध्माखपिबासेति गगधयममकाराः
मूर्द्ध्नो विशश्वस्येति रदधयमनकाराः
कावेरजजयममकाराः
इत्यबोधाधियग्निर्ज्ज्म उदायिति सूरा १३या २ एवमादिनि ५

अथ षडक्षराणामुदाहरणमङ्क्ष्चक्क्म्व्यादाविति द्वौ ककारौ
यममकारवकारयकारा इति
सत्रकात्स्न्र्या इति रततसनयाः अप्साध्यग्ग्ध्मवाहमिति रगगधयममकाराः
६

अथ सप्ताक्षरमेकमुदाहृतं मङ्क्षे प्रातिशाख्ये हि न हि न
धुञुधुञ्क्षुङ्ङ्क्ष्वाविति ङङकषकषवाः

गौतमेनोक्तं न सप्ताक्षरात्परः संयोगो भवत्येषा सहस्रवर्त्मात्मा
नानावर्तिविभूषिता संयोगशृङ्खला नाम सामवेदनिबन्धनात् ७

इति द्वितीयप्रपाठकः

इति सामवेदीयगौतमीशिक्षा समाप्ता